भुजाकोटिफले स्यातां ताभ्यां[1] कर्णश्च पूर्ववत् ।
भूयः पूर्वफलाभ्यस्ते कर्णे त्रिज्याविभाजिते ॥११॥
एवं पुनः पुनः कुर्यात्कर्णः[2] पूर्वोक्तकर्मणा ।
यावत्तुल्यो भवेत्कर्णः पूर्वोक्तविधिनाऽमुना[3] ॥१२॥
विष्कम्भार्धहता भुक्तिः सूर्याचन्द्रमसोः सदा ।
स्वाविशेषेण कर्णेन स्फुटभुक्तिरवाप्यते ॥१३॥[4]
अन्त्यजीवाऽथवा भुक्त्या गुणिता धनुषा हृता ।
स्वपरिध्याहतेऽशीत्या लब्धे हीनाधिके स्फुटा[5] ॥१४॥
अन्त्यजीवाधनुःखण्डं केन्द्रभोगाद्विशोधयेत्[6] ।
तद्विशोध्य मखेश्शेषं[7] पात्यतेऽविषमे[8] ततः ॥१५॥
उच्चभुक्तिविहीनाया भुक्तेः[9] शीतांशुमालिनः ।
उत्क्रमज्या क्रमे ग्राह्या क्रमज्या चोत्क्रमस्थिते[10] ॥१६॥
आद्यन्तयोः फलं युक्त्वा[11] गुणयोश्चानुपाततः ।
तत्फलेन[12] विहीनाढ्या भुक्तिः स्फुटतरा हि सा ॥१७॥
ह्यस्तनाद्यतनयोर्यो विश्लेषोऽतीतभोगकः[13] ।
श्वस्तनाद्यतनयोश्च भावी भोगः[14] प्रकीर्तितः ॥१८॥
कोट्यां पदवशाद्धित्वा युक्त्वा वाऽन्त्यफलं पुनः ।
तद्वर्गबाहुवर्गस्य योगात्कर्णः पदं[15] भवेत् ॥१९॥
कर्णेनान्त्यफलं हत्वा विष्कम्भार्धेन लभ्यते ।
पूर्वकोट्यां धनर्णं[16] स्याद्यावत् कर्णः[17] समो भवेत् ॥२०॥
भुजज्याभिहता त्रिज्या[18] कर्णेनाप्तधनुः क्रमात् ।
केन्द्रात्पदविभागेन धनं स्वोच्चे प्रकल्पयेत् ॥२१॥

---

[1] स्यातामाभ्यां C. [2] °कर्ण A, B. [3] यावत्तुल्या भवेत्संख्या कर्णस्य विधिनामुना C. [4] Missing from C. [5] स्वपरिध्याहताशीत्या लब्धा हीनाधिका स्फुटा C. [6] केन्द्रभागाद्वशोधयेत् A, B. [7] तद्विशुद्धमधः शेषं A, B; तद्विशोध्यमखेश्शेषः C. [8] पात्यते विषमे A, B, C. [9] भक्ते A, B. [10] चेत्क्रमे° A, B. [11] युक्त्या C. [12] तत्फलेह° C; °विहीनाप्ता A, B. [13] ह्यस्तनाद्यतनयोर्विशेषोऽतीतभोगतः A; ह्यस्तनाद्यतनयोपिशेषोऽतीतभोगतः B. [14] भाविभोगः A, B. [15] तद्वर्गबाहुवर्गस्य यः कर्णः······पदं C. [16] पूर्वकोट्या धनर्णं A, B; पूर्वकोट्यायनर्णं C. [17] स्याद्यावान्कर्णः A, B. [18] भुजाज्याभिहता त्रिज्या B; भुजज्याहतां त्रिज्यां C.

तदेव केवलं पूर्वं चक्रार्धं तेन वर्जितम् ।
चक्रार्धं तच्च चक्राच्च संशुद्धं[१] स स्फुटो रविः ॥२२॥
प्रतिमण्डलसंसिद्धिरेषा सम्यक् प्रकीर्तिता ।
स्वान्त्यं[२] फलं च सर्वेषामुच्यते प्रतिमण्डलम् ॥२३॥
स्फुटस्वदेशमध्यार्कविश्लेषान्तरसंगुणा ।
भुक्तिश्चक्रकलावाप्तं[३] पूर्ववत्तद्[४] भुजान्तरम् ॥२४॥
त्रयोदशहता[५] जीवा त्रिस्फुटस्य विवस्वतः ।
द्वात्रिंशता हृता क्रान्तिः परिशेषस्तु पूर्ववत् ॥२५॥
चरप्राणहता[६] भुक्तिरहोरात्रासुभाजिता[७] ।
उदयास्तमयोः[८] शुद्धिः क्षेपश्चोत्तरगे रवौ ॥२६॥
व्यत्ययो दक्षिणे भानावन्येषामनुपाततः[९] ।
फलं च तद्वशाद्विद्धि[१०] क्षेपः शोधनमेव वा ॥२७॥
उदक्चरार्धसंयुक्तः पादोऽहोरात्रसम्भवः[११] ।
दिनार्धं दक्षिणे हीनं[१२] राज्यर्धं तद्विपर्ययात् ॥२८॥
सूर्यबाहुहता भुक्तिर्मध्या चक्रकलाहृता[१३] ।
भास्करस्य वशात् क्षेपः शुद्धिर्वापि निशाकृतः ॥२९॥
शेषं विवस्वता तुल्यं कर्म चन्द्रस्य कीर्तितम् ।
भास्वद्भुजाफलेनैव शेषाणां तु प्रकल्पयेत् ॥३०॥
स्फुटार्कोनः[१४] शशी छेद्यो लिप्ताभिः खद्विभूधरैः[१५] ।
तिथयस्तत्र लभ्यन्ते शेषं षष्ट्या[१६] समाहतम् ॥३१॥
छिन्द्याद् भुक्तिविशेषेण घटीविघटिकासवः ।
तिथेश्शेषो[१७] गतो वापि निर्दिष्टो भास्करोदयात् ॥३२॥

---

[१] संशुद्धं चक्रोच्चः A; संयुक्तं चक्रोच्चः B; चक्राच्च संशुद्धः C. [२] स्थान्त्यं C. [३] चक्रकलाप्राप्ता A, B. [४] पूर्ववत्ते C. [५] त्रयो शुहता B. [६] चरप्राणाहता C. [७] भुक्तिरहोमात्रासुभाजिता B; भुक्तिरहोरात्रन्तभाजिता C. [८] उदयास्तगयोः A, B; उदयास्तमययोः C. [९] भानावन्येषामनुपात्ततः A, B; भानामन्येषामनुपाततः C. [१०] फलं भास्वद्वशाद्विद्धि A; फलं च तद्वशात्सिद्धि C. [११] उदक्परार्धसंयुक्तः पादाहो° A; उदक्परार्धसंयुक्तः वादोहो° B. [१२] हीने C. [१३] भुक्तिर्मध्यचन्द्रकला° A, B; °चक्रकलामता C. [१४] स्फुटार्थोनः A, B. [१५] ...खभूधरैः C. [१६] षष्टचा समं न्यसेत् A; षष्ठचा समभ्यसेत् B. [१७] तिथिः शेषो A, B.

तिथ्यर्धहारलब्धानि करणानि बवादितः[1] ।
विरूपाणि सिते पक्षे सरूपाण्यसिते विदुः ॥३३॥
लिप्तीकृतो ग्रहश्छेद्यः शतैरष्टाभिराप्यते[2] ।
ज्योतिषां निचयो यातो भुक्त्या शेषाद् घटीर्विदुः[3] ॥३४॥
सूर्येन्दुयोगे चक्रार्धे व्यतीपातोऽथ वैधृतः[4] ।
चक्रे च मैत्रपर्यन्ते[5] विज्ञेयः सार्पमस्तकः[6] ॥३५॥
नानायने व्यतीपातस्तुल्यापक्रमयोस्तयोः ।
उद्देशस्तस्य चक्रार्धं[7] विक्षेपात्त्वधिकोनकम्[8] ॥३६॥
तिग्मांशुकेन्द्रवज्जीवाः[9] क्रमशश्चोत्क्रमादपि ।
भुजाकोट्यादिसिद्धिश्च विशेषोऽतोऽभिधास्यते ॥३७॥
स्ववृत्तान्तरगुणां ज्यां[10] पदयोरोजयुग्मयोः ।
क्रमोत्क्रमात् त्रिमौर्व्याप्तां[11] परिधौ परिकल्पयेत् ॥३८॥
क्षयोऽधिकाद्युतिर्हीने[12] परिधिः स्यात् स्फुटो मतः[13] ।
तेनाहतेष्टकेन्द्रज्यां[14] छित्वाऽशीत्या[15] फलं विदुः ॥३९॥
स्वमन्दकेन्द्रसंप्राप्तफलचापार्धमिष्यते[16] ।
पदक्रमाद्यथा भानोः स्वमध्ये तद्विधीयते ॥४०॥
शीघ्रकेन्द्रफलाभ्यस्तं विष्कम्भार्धं विभज्यते[17] ।
स्वकर्णेनाप्तचापार्धं[18] कार्यं तस्मिन्विपर्ययात्[19] ॥४१॥
तस्मान्मन्दफलं[20] कृत्स्नं कार्यमिष्टं स्वमध्यमे ।
एवं भौमार्किजीवानां[21] विज्ञेयाः स्फुटमध्यमाः ॥४२॥

---

[1] बहूदितः C. [2] शरैरष्टाभिराप्यते A, B; शकैरष्टाभिराप्यते C. [3] शेषाद्घटीं विदुः A; शेषात् घटिं विदुः B; शेषघटीर्विदुः C. [4] वैधृतम् C. [5] चक्रे मैत्रे च पर्यन्ते A, B. [6] सार्वमस्तकः A, B, C. [7] नानात्मने व्यतीपाते सूर्योपक्रमयोस्तयोरुद्देशस्तत्सम्पातार्धं C. [8] विक्षेपादधिकोन्नतम् A; विक्षेपादधिकोनतम् B. [9] तिग्मांशुः केन्द्रवज्जीवा A, B; तिग्मांशुकेन्द्रवज्जीवां C. [10] स्ववृत्ता स्वोत्तरगुणा A, B; स्ववृत्तान्तरगुणाज्यां C. [11] क्रमात्क्रमात्त्रिमौर्व्याप्तां A; क्रमात्क्रमात्त्रिमौर्वाप्तं B. [12] क्षयेऽधिकद्युती हीने A; क्षयोऽधिकद्युती हीने B; क्षयोऽधिकाद्युतिहीने C. [13] स्यात्स्फुटा मता A, B. [14] तेनाहतैर्ग्रहेन्द्रज्यां A, B. [15] जित्वाशीत्या C. [16] मन्दकेन्द्रस्थसंप्राप्तं फलं चा° A; मन्दकेन्द्रस्य प्राप्तफल° B. [17] विभाजयेत् A, B. [18] स्वकर्णेनाप्तस्य चा° C. [19] कार्यन्तिविपर्ययात् C. [20] तस्मिन्मन्दफलं A, B. [21] भौमार्कजीवानां A. B.

तद्विहीनचलोत्पन्नफलचापेन[१] संस्कृतः ।
स्फुटमध्यः स्फुटो[२] ज्ञेयः शेषयोरुच्यते विधिः ॥४३॥
शीघ्रन्यायाप्तचापार्धयुक्तहीनो[३] विपर्ययात् ।
मन्दोच्चः स्फुटमध्यस्य[४] कर्ता शीघ्रात् स्फुटं विदुः[५] ॥४४॥
प्रतिमण्डलकर्मापि योज्यमत्र विपश्चिता ।
मन्दोच्चे पूर्ववत्कुर्याच्छीघ्रोच्चात्तद्विशोध्यते[६] ॥४५॥
तदेव केवलं शोध्यं चक्रार्धाच्छोध्य तच्चलात् ।[७]
चक्रार्धसंयुतञ्चापं चक्राच्छुद्धं च शेषयेत् ॥४६॥[८]
स्फुटवृत्तगुणां त्रिज्यां हृत्वाऽशीत्या स्वकोटितः[९] ।
त्यक्त्वा पदेषु युक्त्वा वा कर्णः प्राग्वत् प्रसाध्यते[१०] ॥४७॥
मन्दोच्चसिद्धतन्मध्यविश्लेषार्धसमन्वितः[११] ।
मन्दसिद्धेऽधिके हीने रहितो मध्यमो ग्रहः ॥४८॥
स शीघ्रोच्चात्पुनः साध्यः सिद्धयोरन्तरालजम्[१२] ।
अर्धीकृत्य सकृत्सिद्धे पूर्ववत् परिकल्पयेत् ॥४९॥
एवं कृतस्य भूयोऽपि मन्दसिद्धिं समाचरेत् ।
मन्दसिद्धस्य तस्यायं विशेषोऽतोऽभिधास्यते[१३] ॥५०॥
द्विसिद्धमन्दसिद्धस्य[१४] द्विसिद्धस्य यदन्तरम् ।
प्राग्वत्तन्मध्यमे कृत्वा शीघ्रसिद्धः[१५] स्फुटो ग्रहः ॥५१॥
एवमारार्किजीवानामाख्यातं[१६] प्रतिमण्डलम् ।
शेषयोरप्ययं सम्यगुच्यते यो विधिक्रमः[१७] ॥५२॥
शीघ्रोच्चसिद्धतन्मध्यविश्लेषार्धसमन्वितम् ।
मध्यान्न्यूनेऽधिके हीनं मन्दोच्चं संस्कृतं[१८] विदुः ॥५३॥[१९]

---

[१] तद्विहीनफलोत्पन्नफलंचापेन A, B. [२] स्फुटमध्यस्फुटो A, B, C. [३] शीघ्रस्यावाप्तचापार्धं युक्तहीनो A, B. [४] मन्दोच्चस्फुटमध्यस्य A, B, C. [५] शीघ्रस्फुटं पुनः C. [६] °शीघ्रोच्चं तद्विशोधयेत् A, B. [७] तदेव केवलं योज्यं पादयोः पूर्ववच्चलात् A; तदेव केवलं योज्यं पदयोः पूर्ववच्चलात् B; तदेव केवलं शोध्यं पदयोः पूर्वयोश्चलात् C. [८] चक्रार्धसंयुतश्चापं चक्राच्छोध्यश्च शेषयोः A; चक्रार्धसंयुतश्चापं चक्राच्छोध्यश्च शेषयोः B. [९] भङ्क्त्वाशीत्या स्वकोटिता C. [१०] कृत्वा पदेषु युक्ता वा कर्णं यावत् प्रसाध्यते C. [११] °समन्वितम् C. [१२] सिद्धयोरन्तरा भुजम् A, B. [१३] विश्लेषोऽतो विधास्यते A, B. [१४] ततो द्विसिद्धमन्दस्य A, B. [१५] शीघ्रसिद्ध C. [१६] एवमारार्कजी° C. [१७] विधिः क्रमः B. [१८] संस्कृते A. [१९] मध्यादूनेऽधिके हीनं मन्दमेवं तु कर्मणा B.

बुधभृग्वोः पुनस्साध्यं मान्दमेवं स्वकर्मणा[1] ।[2]
तेन सिद्धौ चलाद् भूयः स्फुटावेतौ[3] प्रकीर्तितौ ॥५४॥
कोटेरन्त्यफलं शोध्यं न शुध्येद् व्यत्ययस्तदा ।
कार्यः[4] कर्णोऽसकृन्मान्दः सकृत्कर्णस्तु शीघ्रजः[5] ॥५५॥
स्फुटमध्यमान्तरदलं मध्यवशादृणं धनं[6] चले कृत्वा ।
वक्रातिवक्रगमने[7] विज्ञेये तन्निवृत्तिश्च ॥५६॥
शीघ्रोच्चात् स्फुटखेचरो निपतितः शेषो[8] यदा राशय-
श्चत्वारो यदि वक्रगत्यभिमुखः षट् चातिवक्रे[9] स्थितः ।
अष्टौ चेत्कुटिलं जहाति विहगः पन्थानमाश्वेव स[10]
त्वैष्यातीतविचारिणोर्विवरकं[11] भुक्तिर्भवेदाह्निकी[12] ॥५७॥
मन्दान्त्यजीवागुणितां[13] स्वभुक्तिं
भूयः स्ववृत्तेन हृतां विभज्य ।
राशेः कलाभिर्दशताडिताभि-
र्भुक्तौ धनर्णं पदयुक्तितोऽर्धम्[14] ॥५८॥
शीघ्रोच्चभुक्तेस्तदपास्य[15] शेषात्
केन्द्रान्त्यजीवाविधिना यदाप्तम् ।
त्रिज्याहतं कर्णविभक्तभेदं
न्यायेन[16] शीघ्रस्य धनर्णमिष्टम् ॥५९॥
तन्मन्दमौर्वीफलचापयुक्तं[17]
सर्वं स्वभुक्तौ[18] धनशोधने तु ।
तस्याविनष्टस्य[19] चलोच्चभुक्ते-
र्जीवाफलं[20] सर्वमनष्टराशौ[21] ॥६०॥

[1] तुक° A, B. [2] बुधभग्वोः···स्वकर्मणा missing from B. [3] स्फुटापेतौ A, B. [4] शुध्येद्व्यत्ययात्तदा साध्यः A, B. [5] °मन्दः सकृत्कर्णः स्वशीघ्रजः A, B. [6] मध्यवशादृणधनं C. [7] व···तातिवक्रगमने C. [8] निपतिताच्छेषं A, B. [9] षड्भिस्तु वक्रे A; षट्भस्तु वक्रे B; षट्चातिवक्रो C. [10] सत् C. [11] त्वेष्यातीतविचारिणोर्विपरकं A, B; नेष्यातीतविचारिणोर्विवरकं C. [12] भुक्तिर्भवेदाहकी C. [13] मन्दान्त्यजीवागुणिका C. [14] वद युक्तितोऽर्धम् A,B. [15] शीघ्रोच्चभक्तेस्तदपास्य A, B. [16] कर्णविभक्तभेदं न्यायेन A, B; कर्ण विभक्तभेद न्यायेन C. [17] °पमुक्ता A; °पमुक्त्वा B. [18] सर्वस्स्वभुक्तौ A; सर्वस्वभुक्तौ B. [19] तस्याविनष्टं स्व C. [20] चलोच्चभक्ते जीवाफलं A, B. [21] सर्वमनिष्ट राशौ A, B.

एवं ग्रहाणां स्फुटभुक्तिरिष्टा[१]
तस्मान्न शुध्येद्यदि शीघ्रलब्धम् ।
तयोर्विशेषः स्फुटभुक्तिसंख्या
वक्री ग्रहोऽसाविति[२] सद्भिरुक्तः ॥६१॥
एवं सुरेड्यार्किधरासुतानां[३]
भुक्तिः स्फुटाऽतो[४] भृगुसोमसून्वोः[५] ।
मन्दोच्चकेन्द्रादपि संस्कृताद्धि
शीघ्रान्त्यजीवाविधिना[६] यदाप्तम्[७] ॥६२॥
तेनैव सर्वेण युतो विहीनो[८]
भोगः स्फुटोऽयं[९] कथितो विशेषः ।
इत्थं[१०] ग्रहाणां व्यवहारिकी स्याद्
भुक्तिः स्फुटासन्नतरा च नित्यम्[११] ॥६३॥
गन्तव्ययाततिथिशेषहते रवीन्द्वो-
र्भुक्ती क्रमेण[१२] दिनभुक्तिविशेषभक्ते[१३] ।
लब्धेन[१४] युक्तरहितौ शशितिग्मरश्मी
ज्ञेयौ समौ सकललोकविधानहेतू[१५] ॥६४॥

इति महाभास्करीये चतुर्थोऽध्यायः ।

---

[१] एवं स्फुटा स्याद् ग्रहभुक्तिरिष्टा C. [२] वक्र ग्रहोऽसाविति A, B. [३] सुरेड्यार्कधरासुतानां A; सुरेध्वार्कधरासुतानां B. [४] भुक्तिस्फुटातो C. [५] मृगसोमसून्वोः C. [६] शीघ्राद्यजी° A, B. [७] च लब्धम् A, B. [८] युते विहीनौ A, B; युतोऽथ हीनो C. [९] भोगः स्फुटो यः A, B; भोगस्फुटोऽयं C. [१०] इयं A, B; उक्तं C. [११] भुक्तिः स्फुटासन्नतरा च नित्या A, B; भुक्तिः स्फुटासन्नतरा च नित्यम् C. [१२] भुक्ति क्रमेण A, B; भुक्तिक्रमेण C. [१३] दिनशो भविशेषभक्ते A, B. [१४] भक्तेन B. [१५] °हेतुः A, B.

## पञ्चमोऽध्यायः

भास्वतो ग्रहणं वाच्यमाचार्यार्यभटोदितम् ।
तस्य चादौ विजानीयादुपायानां विनिश्चयम् ॥१॥

पञ्चाष्टभूतरन्ध्रेषुवेदाः कर्णो विवस्वतः ।[१]
सप्तपर्वतरामाब्धिगुणसंख्या निशाकृतः ॥२॥

कलाकर्णहतावेतौ विष्कम्भार्धविभाजितौ ।
स्फुटयोजनकर्णौ तौ सूर्याचन्द्रमसोर्विदुः[२] ॥३॥

दिग्वेदसागरा भानोरिन्दोरितथिहुताशनाः ।
योजनैरुच्यते सद्भिर्भूव्यासः खेषुपङ्क्तयः[३] ॥४॥

विष्कम्भार्धहतौ व्यासौ स्फुटयोजनभाजितौ ।
भवतस्तौ कलाव्यासावुष्णशीतलतेजसोः[४] ॥५॥

नवांशाः पञ्चभोगस्य भूतवर्गांश एव च ।
स्वतुरीयविलिप्ताभिर्युतहीने तनू स्फुटे[५] ॥६॥

सूर्याचन्द्रमसोर्विद्धि राहुबिम्बं च कथ्यते ।
पङ्क्त्यंशश्चन्द्रभोगस्य षोडशांशो विलिप्तिकाः[६] ॥७॥

अथातो मध्यलग्नस्य विधानं सम्प्रवक्ष्यते ।
निरक्षासुभिरुत्पत्तिर्बोद्धव्या शास्त्रकोविदैः ॥८॥

पूर्वाह्णे सूर्ययुक्तस्य गतभागासवो हि ये ।
गन्तव्यानां चापराह्णे[७] भागानामसवः स्मृताः ॥९॥

मध्यतिथ्यन्तरासुभ्यः[८] शोध्या भागादि[९] भास्करे ।
शोध्या देयाश्च भूयोऽपि निरक्षासुवशाद्रवौ ॥१०॥

---

[१] पञ्चाष्टरन्ध्रभूतेषुवेदाः कर्णो विवस्वतः A, B; पञ्चाष्टभूतरन्ध्राणि भूतवेदा विवस्त्रतः C. [२] °सोऽस्सदा C. [३] सद्भिर्भुवासः खेषु पङ्क्तिभिः A, B. [४] कलाख्यासा° A, B; °शीतगुतेजसोः A, B, C. [५] °युक्तहीने तनुः स्फुटे A, B; °युतहीने तनूस्फुटम् C. [६] षोटशांशोनलिप्तिकाः A, B. [७] गन्तव्याणां चापराह्णे B; गन्तव्यानामपराह्णे C. [८] मध्यं तिथ्यन्तराशाभ्यः A; मध्यं तिथ्यन्तराभ्यः B. [९] भागाश्च A, B; भागाहि C.

राशयः कालतत्त्वज्ञैरनुपाताप्तमेव च ।
मध्यलग्नमिदं स्पष्टं[1] श्रीमद्भटमुखोदितम् ॥११॥
कक्ष्याभेदाच्छशीभान्वोर्जीवाभेदः[2] प्रकीर्तितः[3] ।
ज्ञापकं च स्वदृक्क्षेप[4] इत्यादिवचनं[5] प्रभोः ॥१२॥
बाहुज्योदयलग्नस्य परक्रान्तिहृता[6] हृता ।
लम्बकेनोदयज्याप्ता कक्ष्यायां भास्वतः स्फुटा[7] ॥१३॥
सैंहिकेयविहीनस्य जीवा लग्नस्य ताडिता ।
तिथिभिश्चन्द्ररन्ध्रैर्कैर्विक्षेपज्या विलग्नजा[8] ॥१४॥
विलग्नक्रान्तिविक्षेपधनुषोस्तुल्यदिक्कयोः[9] ।
युक्तिर्वियुक्तिरन्यत्वे शेषकाष्ठगुणाहतम्[10] ॥१५॥
उदयज्येन्दुकक्ष्यायां व्यासार्धं लम्बकोद्धृतम्[11] ।
राहूनमध्यलग्नाच्च विक्षेपज्या प्रसाध्यते ॥१६॥
मध्यक्रान्तिविषुवज्ज्याकाष्ठयोरेकदिक्कयोः[12] ।
योगो वियोगो वाऽन्यत्वे[13] मध्यज्या शेषदिग्वशात्[14] ॥१७॥
रवेरिन्दोः पलक्रान्तिविक्षेपधनुषां[15] वशात् ।
योगविश्लेषजा जीवा मध्यज्या शेषदिग्भवा ॥१८॥[16]
स्वमध्यज्योदयाभ्यासं विष्कम्भार्धाप्तिवर्गितम् ।[17]
मध्यज्यावर्गतोऽपास्य[18] स्वदृक्क्षेपं[19] पदं विदुः ॥१९॥
गतगन्तव्यनाडीभिर्दृग्ज्या[20] पूर्वोक्तकर्मणा ।
साध्या रवेश्शशाङ्कस्य[21] विधानमिदमुच्यते ॥२०॥

---

[1] ......मध्यलग्ना A, B. [2] कक्ष्याभेदाच्छश्चीभावो जीवाभेदः A; कक्ष्याभेदाच्चचीभावो जीवाभेदः B; कक्ष्याभेदाच्छशिभान्वोर्जीवाभेदः C. [3] प्रकीर्त्यते C. [4] ज्ञापनं च स्वदृक्षेपौ A, B. [5] ......त्यादिवचनं B. [6] परत्रास्ति हृता C. [7] भास्वते स्फुटः A. B; भास्वतः स्फुटम् C. [8] पिलग्नजा C. [9] विलग्नक्रान्तिपक्षेवध° B. [10] शेषकाष्ठगुणाज्ज्यागता A, B. [11] लम्बकाहृतम् C. [12] °ज्ज्याताष्टयोरेकदिक्कयोः A, B; °काष्ठयोरेकद्रिक्रयोः C. [13] नानात्वे C. [14] शेषदिशात् B. [15] पलाक्रान्तिविक्षेपधनुषां C. [16] This verse is missing from A, B. [17] स्वमध्योदययाभ्यासाद्विष्कम्भार्धाप्तिवर्गितात् A, B; स्वमध्यज्योदयाभ्यासविष्कम्भार्धाप्तिवर्जितम् C. [18] °तोऽवास्य C. [19] A and B read दृक्षेप in place of दृक्क्षेप. [20] गतगन्तव्यनाडीभिर्भज्यात् A, B. [21] भवेच्छशाङ्कस्य A, B.

समलिप्तेन्दुविक्षेपक्रान्तिज्याचापसंयुतिः ।
वियुक्तिर्विदिशोर्जीवा शेषस्येन्दोरपक्रमः ॥२१॥
तेनाहोरात्रविष्कम्भक्षितिजीवाचरासवः ।
प्रसाध्यास्तैश्च दृग्जीवा गतगन्तव्यकालतः ॥२२॥
स्वदृग्दृग्क्षेपगुणयोर्वर्गविश्लेषजे पदे ।[1]
दृग्गतिज्ये भवेतां ते भास्करामृततेजसोः ॥२३॥
स्वदृग्गतिक्षमाव्यासभेदसंवर्गसंभवम्[2] ।
पृथग्योजनकर्णाप्तं लिप्ताद्यं[3] लम्बनं विदुः ॥२४॥
तद्विशेषो[4] हतः षष्टया स्फुटभुक्त्यन्तरोद्धृतः[5] ।
घटिकादिस्तिथेः[6] प्राक्त्वे शुद्धिः क्षेपोऽपरे[7] मतः ॥२५॥
दिनार्धकालनिष्पन्नं लम्बनं शोध्यते तिथेः ।
उदगिन्दूदयज्यायां दीयते तत्र दक्षिणे ॥२६॥[8]
एवं पुनः पुनः कर्म यावत्तदविशिष्यते ।[9]
तिथिवच्चन्द्रतीक्ष्णांशू सञ्चार्यविव पण्डितैः ॥२७॥
दृक्क्षेपज्ये त्वविशिष्टे[10] भूव्यासार्धहते हृते ।
स्फुटयोजनकर्णाभ्यामवाप्ता लिप्तिकादयः ॥२८॥
अभिन्नाशयोर्विश्लेषस्तासां[11] सूर्यनिशाकृतोः ।
मध्यज्ययोरथान्यत्वे योगोऽवनतिलिप्तिकाः[12] ॥२९॥
दिक् तत्र शशिनो ग्राह्या पातहीनान्निशाकृतः[13] ।
ज्यां खसप्ताश्विभिः क्षुण्णां कलाकर्णेन संहरेत् ॥३०॥
विक्षेपः शशिनः स्पष्टस्तेन युक्ता नतिः स्फुटा ।
नानाशयोस्तु विश्लेषः शेषा सा नतिरुच्यते ॥३१॥[14]
लम्बनान्तरसंयुक्तग्रासमध्याप्तजन्मनोः[15] ।
दृक्क्षेपक्षेपयोः सिद्धा मध्या चावनतिः[16] स्फुटा ॥३२॥

---

[1] दृक्क्षेपगुणवर्गस्य विश्लेषपदमाहृतम् C. [2] °संवर्गसञ्चयः C. [3] लिप्ताद्यु A, B; लिप्ताद्या C. [4] तद्विश्लेषो A, B. [5] स्फुटभुक्त्यन्तराहृतः A, B. [6] घटिकादितिथेः A, B; घटिकादिस्थितः C. [7] के वो परे C. [8] This verse is missing from A and B. [9] This hemistich does not occur in A and B. In C the initial word एवं is missing. [10] त्पविश्लिष्टे A, B. [11] अभिन्नाशयो विशेषस्तासां C. [12] योगोपनतिलिप्तिकाः A, B; योगावनतिलिप्तिका C. [13] पातहीनां निशाकृतः C. [14] तातातयोस्तु विश्लेषशेषास्सा गतिरुच्यते A, B. [15] °संयुक्तं ग्रहम° A, B. [16] मध्याद्यवनतिः C.

सूर्येन्दुबिम्बसम्पर्कदलेन सदृशी नतिः ।
ग्रहणं भास्वतो न स्याद्धीनायामस्ति सम्भवः ॥३३॥
सम्पर्कार्धनतिवर्गविशेषपदमाहतम् ।[१]
षष्टचा गत्यन्तरेणाप्ताः[२] स्थित्यर्धघटिकाः स्मृताः[३] ॥३४॥
अविशेषतिथिस्ताभिर्विहीना[४] सहिता सदा[५] ।
ग्रासादिमोक्षकालौ स्तः[६] ताभ्यां जीवाविधिस्तदा ॥३५॥
ग्रासमध्यविनिष्पन्नलम्बनान्तरनाडिकाः ।
स्थित्यर्धे प्रक्षिपेन्नित्यं ग्रहणे[७] तिग्मदीधितेः ॥३६॥
मध्यान्तलम्बनं स्थित्या[८] वर्धते मोक्षसम्भवः ।
स्थित्यर्धमित्यतिस्पष्टमुत्क्षिप्य भुजमुच्यते ॥३७॥
स्पर्शमोक्षौ यदान्यस्मिन्कपाले ग्रहमध्यतः ।
स्पर्शजं लम्बनं सर्वं देयं स्थित्यर्धनाडिषु ॥३८॥[९]
मोक्षेऽप्येवं तदायातं[१०] स्थित्यर्धे दीयते सदा ।
दिनार्धे ग्रासमध्ये च कल्प्यतेऽयं विधिक्रमः[११] ॥३९॥
ग्राह्यग्राहकबिम्बार्धविश्लेषक्षेपवर्गयोः ।
विश्लेषस्य पदं ज्ञेयं विमर्दार्धस्य लिप्तिकाः ॥४०॥[१२]
तीक्ष्णांशुबिम्बवस्वंशलिप्तिकाकालसंयुतः ।
स्पर्शकालो भवेत्सत्यो[१३] भासुरत्वाद्विवस्वतः ॥४१॥
मध्यतिथ्यन्तरासूनामुत्क्रमज्याक्षसङ्गुणा ।
विष्कम्भार्धेन भक्तव्या[१४] लब्धकाष्ठस्य दिग्विधिः ॥४२॥
व्यासार्धादधिकासूनां[१५] क्रमज्यां[१६] त्रिज्यया युताम् ।
कृत्वैवमेव दिक्कल्प्या मध्ये प्राग्ग्रासवद्दिशा[१७] ॥४३॥
उदग्दक्षिणतः प्राह्णे बिम्बप्राक्पश्चिमार्धयोः[१८] ।
नभसः[१९] पश्चिमे व्यस्तमक्षस्य वलनं सदा ॥४४॥

---

[१] विष्कम्भार्धनतीवर्गविश्लेषपदमागतम् A, B. [२] षष्टचाहत्यास्तरेणाप्ता A; षष्ठचा हत्या स्तरेणाप्त B. [३] स्फुटा A, B. [४] विशेषस्थितिभिस्ताभिर्विहीना C. [५] तदा A, B. [६] तौ C. [७] प्रक्षिपेन्नित्यग्रहणे C. [८] मध्यान्तलम्बनस्थित्या A, B. [९] स्पर्शनं लम्बनं देयं सर्वस्थित्यर्धनाडिषु A, B. [१०] सदायातं A, B. [११] ग्रहमध्ये च कल्प्यतेऽयं विधिः क्रमात् A, B. [१२] विक्षेपस्य पदाद्देयं विमर्दार्धस्य नाडिकाः A, B. [१३] भवेत्तस्य A, B. [१४] हर्तव्या A, B. [१५] व्यासार्धाच्चाधिकासूनां C. [१६] क्रमज्या A, B. [१७] प्रागासवद्दिशोः A, B; प्रागासवद्दिशा C. [१८] दिग्दक्षिणतः प्राह्णे बिम्बंप्रा° A, B. [१९] नभसं C.

त्रिराशिसहितेन्द्वर्कविपरीतगुणापमः[1] ।
अयनादिक्तु[2] पूर्वार्धे बिम्बस्यैवापरेऽन्यथा ॥४५॥
नानाशयोस्तयोर्विद्धि विश्लेषः धनुषोः सदा[3] ।
संयोगोऽन्यत्र तज्जीवा सम्पर्कार्धहता[4] हृता ॥४६॥
विष्कम्भार्धेन यल्लब्धमाशासाम्ये युतं[5] नतौ ।
विश्लेषो व्यत्यये[6] कार्यो वलनं तत्र शिष्यते ॥४७॥
मुखविन्यस्तसुश्लक्ष्णवर्तिकाङ्कुरशोभिना ।*
अङ्किताङ्गुलतद्भागसमस्निग्धोरुमूर्तिना[8] ॥४८॥
ग्राह्यबिम्बार्धमानेन[9] कर्कटेनालिखेत्क्षितौ ।
ग्राह्यग्राहकबिम्बार्धसमवक्त्रेण चापरम् ॥४९॥
पूर्वापरे[10] ततः कुर्यान्मीनेनोत्तरदक्षिणे ।
दक्षिणोत्तरतः केन्द्रान्नीत्वा वलनमप्यतः[11] ॥५०॥
उत्पाद्य तत्र मत्स्याङ्कं[12] युक्त्या सूत्रं नयेद् बुधः ।
बाह्यमण्डलतत्सूत्रसम्पाते बिन्दुनिश्चयः ॥५१॥
बिन्दुतः केन्द्रसम्प्रापि[13] सूत्रं तस्मात्[14] प्रसार्यते ।
तस्यग्राह्यपरिधेश्च सम्पातो[15] यत्र लक्ष्यते ॥५२॥
तत्र तीक्ष्णांशुबिम्बस्य प्रदेशौ[16] स्पर्शमोक्षयोः ।
मौरिकाऽर्धाङ्गुला[17] ज्ञेया यथा वा लक्ष्यते दिवि ॥५३॥
नत्यसंयुक्तविश्लिष्टं वलनं[18] ग्रहमध्यजम् ।
तन्नत्योस्तुल्यकाष्ठत्वे वलनं पूर्वतो नयेत् ॥५४॥

---

[1] °वमः A, C. [2] लग्नाद्या दिक्तु A, B. [3] विश्लेषधनुषोस्तयोः A, B; विश्लेषधनुषोः सदा C. [4] सन्वर्कार्धहता A, B. [5] °साम्य-युते C. [6] व्यत्ययः C. * Verses 47-48(i) are missing from A and B. [8] अन्तिकाङ्गुलतद्भाग° A, B; °धोऽथ मूर्तिना C. [9] ग्राह्याङ्गुलार्धमानेन A, B. [10] पूर्वावरे B; पूर्वापर C. [11] बलमानतः C. [12] उत्पाटय तत्र मत्स्यान्तं A, B;.. उत्पाद्य मत्स्याङ्कं C. [13] विन्दुतः केन्द्रसम्प्राप्ति A, B. [14] सूत्रं तस्मात्प्रसाध्यते A, B; तस्मात् सूत्रं प्रसार्यते C. [15] तस्य ग्राह्यपरिधेश्च सन्तापो A; तच्च ग्राह्यपरिधेश्च सम्पातो C. [16] प्रदेशः A, B. [17] मौर्वी कार्धाङ्गुला A; मौर्वीकार्द्धाङ्गुला B. [18] नत्या संयुक्तविश्लिष्टं वलनं A, B; नत्यसंयुक्तविश्लिष्टवलनं C.

भिन्नाशयोस्तयोः केन्द्रात् पश्चिमेन प्रसार्यते ।
तन्नत्यनुदिशं सूत्रं ततो मत्स्येन नीयते ॥५५॥
बाह्यमण्डलतः केन्द्रमानयेत्तद्विचक्षणः[१] ।
केन्द्रात्तदनुसारेण नतिसूत्रं प्रसार्यते ॥५६॥
मध्यबिन्दुस्तदग्रे[२] स्याद्बिन्दू तौ[३] स्पर्शमोक्षयोः ।
दक्षिणस्यां नतौ भागे याम्ये सौम्ये विपर्ययः[४] ॥५७॥
विधिर्ग्रहणमध्यस्य भानोरिन्दोर्विपर्ययात्[५] ।
आलिखेत्तद्ग्रहे व्यक्तं ग्रासमध्यान्तसम्भवम्[६] ॥५८॥
मध्यबिन्दुशिरोन्यस्तग्राहकार्धवपुर्धृता[७] ।
खण्डयेत् कर्कटेनाशु निर्दिष्टस्पष्टमानतः[८] ॥५९॥
ग्राह्यस्य खण्डितं यावच्छेद्यके लिखितं च यत् ।[९]
ग्रहमध्ये तथा सर्वं[१०] विस्पष्टमुपलक्ष्यते ॥६०॥
न्यस्तबिन्दुत्रयप्रापि[११] मीनाभ्यां वृत्तमालिखेत् ।
ग्राहकस्य भवेत्पन्थाः तत्रेष्टग्रासकल्पना ॥६१॥
इष्टकालविहीनेन[१२] स्थित्यर्धेन हतं[१३] हरेत् ।
सूर्येन्द्वोर्भुक्तिविश्लेषं षष्ट्या लब्धस्य[१४] वर्गितम् ॥६२॥
प्रक्षिप्यावनतेर्वर्गे यन्मूलं रविसोमयोः ।
इष्टग्रासशलाका स्यात् तच्छेषो[१५] ग्रास इष्टजः ॥६३॥
सुश्लक्ष्णा वैणवी शलाका[१६] केन्द्रात्तिर्यक् प्रसार्यते ।
तस्याग्रेण[१७] तथा पन्थाः प्राप्यते[१८] ग्राहकस्य यः[१९] ॥६४॥
तत्र[२०] ग्राहकमानेन खंडयेद् ग्राह्यबिम्बकम् ।
तावदेव तथाग्रस्तं[२१] दृश्यते ग्राह्यमण्डलम्[२२] ॥६५॥

---

[१] केन्द्रमानीयेत्तद्विचक्षणः A. [२] मध्यबिन्दु° C. [३] स्याद्बिन्दुस्तत् A, B. [४] विपर्ययात् A, B. [५] भानोरिन्दोश्च पर्ययात् A, B. [६] °सम्भवैः C. [७] °पुर्युता C. [८] °स्फुट मानता A, B. [९] ग्राहास्य खण्डिता यावच्छेद्यतेऽथ······यत् A; ग्राह्यस्य खण्डिता यावच्छेद्यतेऽथ यत् B. [१०] सर्वा A, B. [११] न्यस्तं बिन्दुत्रयप्राप्ति A, B. [१२] इष्टहीनेन युक्तेन A, B. [१३] हतां A, B; नतं C. [१४] लम्बस्य C. [१५] स्याच्छेषो B; न्धात्तच्छेषं C. [१६] वैर्णविशत्कात् A, B; वैणवी शलाका C. [१७] यथाग्रेण C. [१८] प्रोच्यते A, B. [१९] च A, B. [२०] यत्र A, B. [२१] यथावक्रं C. [२२] ग्राह्यमण्डले A, B.

विमर्दार्धकलाहीनं यत् स्थित्यर्धं कलामितम्[1] ।
तत्कालच्छेद्यकस्तेन भास्वद्बिम्बं विखण्डयेत् ॥६६॥[2]
प्रदेशस्तस्य[3] बिम्बस्य कर्कटेनावगाह्यते ।
पश्चार्धे गृह्यते व्यक्तं पूर्वे चासौ प्रमुच्यते ॥६७॥
एवमाशामुखादर्शसकलोरुकलाभृतः ।
कान्तावदनसंवृत्तवपुषः[4] शशलक्ष्मणः ॥६८॥
अपि कार्यो[5] विधिर्ज्यानां विशेषो यः स कथ्यते ।
भूच्छायाया गुणाः[6] कल्प्या रवेः कक्ष्यासमुद्भवाः ॥६९॥
भागहारः शशाङ्कस्य कर्ण एव प्रकीर्तितः ।
शशिवल्लम्बनाल्लब्धं व्यत्ययात् क्षेपशोधने ॥७०॥
ताडितो योजनः कर्णो धात्रीव्यासेन[7] भास्वतः ।
तयोर्व्यासविशेषेण भूच्छायादैर्घ्यमाप्यते[8] ॥७१॥
पञ्चाहतो रवेः कर्णः षोडशापहृतः[9] फलम् ।
भूच्छायादैर्घ्यमाख्यातमिन्दुकर्णस्ततः क्षयः ॥७२॥
भूव्यासगुणिते शेषे छायादैर्घ्यहृते फलम् ।
विष्कम्भार्धहृतं भक्तं चन्द्रकर्णेन तत्तमः[10] ॥७३॥[11]
अन्ये वदन्ति[12] शशिनो ग्रहणोपदेशं
हीनं गुणैर्दशभिरल्पफलान्तरत्वात्[13] ।
स्थित्यर्धकालमचलं विदधीत तस्मिन्
आद्यन्तयोर्ग्रहणमध्यसमुत्थितं यत् ॥७४॥
क्षुण्णा[14] स्थित्यर्धकालेन भुक्तिः षष्टया[15] समाहृता ।
समलिप्ते क्षयः स्पर्शे[16] मोक्षे क्षेपो निगद्यते ॥७५॥
विक्षेपस्तस्य तस्माच्च[17] स्थित्यर्धं च प्रसाध्यते ।
एवं कर्माविशेषोऽयं[18] विमर्दार्धस्य वा पुनः ॥७६॥

[1] कलाभृतः A, C; कलाभितः B. [2] तत्कालच्छेद्यकं तेन भास्वत्खण्डादि खण्डयेत् A, B. [3] प्रदेशसूत्रं A, B. [4] °संवृतः वपुषः B. [5] अविकार्यो A, B. [6] भूच्छायायां गुणाः A, B; भू······छाया रवेः C. [7] धात्रिव्यासेन B. [8] छायादीर्घत्वमाप्यते C. [9] षड्वशापहृतः C. [10] तततः A, B. [11] In C the second half of this verse reads as follows विष्कम्भार्धहृतं चन्द्रकर्णेन·········तत्तमः [12] भवन्ति A, B. [13] °रन्यफ° A, B. [14] क्षुण्णः A. [15] षष्ठ्या B. [16] क्षयस्पर्शे A, B, C. [17] तस्मिंश्च C. [18] कर्माविशेषोऽयं A, B.

विक्षेपः शशिनः कल्प्यश्छेद्यकाले सतां वरैः ।
उत्तरो दक्षिणे नित्यं दक्षिणश्चोत्तरे तथा ॥७७॥
प्रोक्तमेतदवधूय मत्सरं[1]
सूर्यचन्द्रतमसां क्रमागतम् ।
कर्म येन विदुषा समर्जितं[2]
दैवविद्भवति सर्वतन्त्रवित् ॥७८॥

इति महाभास्करीये पञ्चमोऽध्यायः ।

---

[1] मत्सरः B; यत्परं C. [2] समर्पितं A, B, C.

## षष्ठोऽध्यायः

स्वेष्टदेशपलजीवया हतां
क्षिप्तिमिष्टशशिजां[1] समाहरेत्[2] ।
लम्बकेन यदवाप्तमुत्तरे
शोधयेदुदयगे निशाकरे ॥ १ ॥
अस्तगे धनमुशन्ति तद्विदो[3]
दक्षिणे विधिरयं विपर्ययात्[4] ।
वर्जितत्रिभवनस्य[5] शीतगो-
रुत्क्रमापमविसंहृतिं[6] हरेत् ॥ २ ॥
व्यासवर्गनिचयेन शोधये-
च्चन्द्रतोऽयनविमण्डलाशयोः[7] ।
तुल्ययोर्धनमुशन्ति तद्विदो
व्यत्यये[8] शशिनि तत्फलं[9] सदा ॥ ३ ॥
दृश्यचन्द्र इति कथ्यते बुधै-
रेवमाकलितचारसञ्चयः[10] ।
भास्करेन्दुविवरांशकोद्भव-
प्राणराशिघटिकाद्वये[11] शशी ॥ ४ ॥
दृश्यतेऽमलनिरभ्रतारके
भास्करेऽस्तगिरिमूर्धगेऽम्बरे ।
चन्द्रभानुविवरोत्क्रमज्यया
चन्द्रबिम्बमभिहत्य भाजयेत् ॥ ५ ॥
षण्णगाष्टरससंख्यया[12] सितं
नित्यमेव गणकाः प्रजानते[13] ।

---

[1] शिप्तिमिष्टशशिजां C. [2] हेरेत्पुनः A, B. [3] ता रवेः A, B. [4] विपर्ययः A,B. [5] वर्जितं त्रिभुवनस्य A, B, C. [6] रुत्क्रमावमविसंहृतिं A; रुत्क्रमावम···संहृतिं C. [7] च्चन्द्रमोऽय° C. [8] व्यत्ययेन B. [9] तत्पलं A. [10] °मालिखित° A, B. [11] भास्करेन्दुविवरांशकोद्भवः प्राणराशिघटिकाद्वयैः A, B. [12] षण्णवाष्ट° A, B. [13] प्रजायते A, B.

चन्द्रभानुविवरं[1] पदाधिकं[2]
स्यात्तदा क्रमगुणेन युक्तया[3] ॥ ६ ॥
त्रिज्यया[4] सितविधिर्विधीयते
पौर्णमास्यपरतोऽसितं[5] तथा ।
सूर्यचन्द्रविवरांशजीवया
चोत्क्रमक्रमवशात्सितं विदुः ॥ ७ ॥
चन्द्रमोपमविकाष्ठयोर्युति-[6]
स्तुल्यगोलभवयोरतोऽन्यथा ।
काष्ठयोर्विवरतोऽपमो[7] गुण-
स्तेन चन्द्रचरनाडिकाविधिः ॥ ८ ॥
भानुचन्द्रविवरासुभिः सदा
शङ्कुरुक्तविधिना विधीयते ।[8]
अक्षचापगुणसंगुणं हरे-
ल्लम्बकेन शशिकीलकं स्फुटम् ॥ ९ ॥
कीलकाग्रगुण आप्यते ततो
नित्यदक्षिणगतोऽस्तसूत्रतः ।
गोलखण्डगुणितो[9] विभज्यते
लम्बकेन शशिनोऽपमः स्फुटः[10] ॥१०॥
दक्षिणोत्तरदिशोर्निशाकृतो[11]
लभ्यतेऽग्रगुणसंज्ञितः[12] सदा ।
तुल्यकाष्ठगतयोस्तयोर्युतिं[13]
शुद्धिमन्यभवयोस्तयोर्विदुः[14] ॥११॥
भास्कराग्रगुणकेन तस्य तु
व्यत्ययेन युतिशोधने कृते ।

---

[1] भानुचन्द्रवि° C. [2] वदाधिकं A, B. [3] युक्त्या B. [4] त्रज्यया B. [5] पूर्वमानवसतोसितं A; पूर्वमानवरतोसितं B. [6] चन्द्रमाबदवि° A, B; चन्द्रमोऽवम° C. [7] काष्ठयोर्विवरजापरो A, B; काष्ठयोर्विवरतोऽवमो C. [8] In B, 8(ii) and 9(i) have been interchanged. [9] गोलखण्डगुणिते C. [10] शशिनोपमा स्फुटः A, B; शशिनोऽवमस्फुटा C. [11] °कृतोः A, B. [12] लभ्यते ग्रहण संज्ञितः C. [13] °युतिः A, B, C. [14] शुद्धिरग्रहणयोरतोऽन्यथा C.

बाहुकः शशभृतः स्फुटो मतः[1]
कोटिरत्र शशिशङ्कुरिष्यते ॥१२॥
सूर्याद्याम्योत्तरे बाहुः कोटिः[2] पूर्वापरायता[3] ।
बाहुकोटिशिरःप्रापि सूत्रं कर्णः प्रकीर्तितः ॥१३॥
कर्णकोटयग्रसम्पाते शशिबिम्बं समालिखेत् ।
तस्य पूर्वापरं[4] कर्णस्तन्मध्याद्दक्षिणोत्तरे ॥१४॥
दक्षिणोत्तरयोर्बिन्दू चन्द्रबिम्बे समालिखेत् ।[5]
कर्णसूत्रानुसारेण बिम्बान्तस्सिसितबिन्दुकम्[6] ॥१५॥
तद्विन्दुत्रयशीर्षस्पृग्वृत्तमालिख्यते[7] सदा ।
तत्र शीतांशुबिम्बस्य विवरं[8] शौक्ल्यमुच्यते ॥१६॥
शृङ्गोन्नतिनती साम्यं मानादिष्टं[9] यथा तथा ।
तत्सर्वं व्योम्नि शीतांशोर्विस्पष्टमुपलक्ष्यते[10] ॥१७॥
अस्तारूढे[11] रवावेतदिष्टकालेऽस्तलग्नतः ।
तत्कालेन्दोस्तु दृग्ज्यादिकर्म सर्वं प्रकीर्तितम् ॥१८॥
अष्टम्याः परतः कल्प्यो लग्नमेव दिवाकरः ।[12]
शङ्क्वादिको विधिस्तेन सितमानविवर्जितः[13] ॥१९॥
अर्केन्दुविवरप्राणैरुदयास्तेन्दुवैवरैः ।
शङ्कुः कालवशात्कार्यो नाविशिष्टैर्यथेष्टजैः ॥२०॥[14]
एवमास्तमिकैस्तैस्तैर्भास्करेन्दुतमोमयैः[15] ।
यावत्पञ्चदशी तावत् कर्मेदं शशिनः स्मृतम्[16] ॥२१॥
रविचन्द्रान्तरा नाड्यो[17] दिनमानेन वर्जिताः[18] ।
प्राक् पश्चाद् दृश्यते सोमस्तावतीभिरिनेऽस्तगे ॥२२॥

---

[1] बाहुका शशभृतः स्फुटा मता C. [2] कोटी C. [3] पूर्वंपरायतः A, B. [4] पूर्वापर C. [5] The second half of verse 14 and the first half of verse 15 is missing from A and B both. [6] बिम्बादसितबिन्दुतः C. [7] तदिन्दुद्वय° C. [8] विवरः A, B. [9] शृङ्गोन्नती नतीसाम्ये मानादिष्टां A, B; शृङ्गानाती नतीसाम्यमानादिष्टं C. [10] °मुपलभ्यते A, B. [11] अस्तारूढ C. [12] The first half of verse 19 is missing from C. [13] धनमानविवर्जितः A, B. [14] अथेन्दुविवरप्राणैरुदयस्थे रवेः परैः । शङ्कून्नतिवशात्कार्यो नावशिष्टे यथेष्टजम् ॥ A, B. [15] °न्दू तमोमयैः A, B; °स्तैस्तै······भास्करेन्दु° C. [16] शशिनो मतम् C. [17] रविचन्द्रान्तरं नाड्योः A, B; रविचन्द्रान्तरनाड्यो C. [18] वर्धिताः C.

पक्षान्तात्परतः[1] सोमो हरिजादुपरि[2] स्थितः ।
इष्टकालविलग्नोत्थैः[3] प्रमाणैः परिलिख्यते ॥२३॥
कोटिः पूर्वाग्रतः[4] कार्या भुजा याम्योत्तरायता ।
अग्रे कोटिशिरःस्पृक्कं[5] कर्णसूत्रं प्रसार्यते ॥२४॥
पूर्वतः कर्णसूत्रेण सितमानं प्रवेशयेत् ।
असितं[6] वा पराद्भागं[7] शीतांशोः परिलेखने ॥२५॥
अथवाऽर्कोदये कार्यं तत्कालेन्द्वर्कसम्भवैः ।
सितासितस्य पूर्वोक्तं दृश्यकालोऽभिधास्यते[8] ॥२६॥[9]
षड्राशियुक्तसूर्येन्दुवैवरादुदयासवः[10] ।
अविशिष्टाः सिते पक्षे दृश्यकालोऽप्यतः परम्[11] ॥२७॥
चक्रार्धयुततीक्ष्णांशोश्चन्द्राच्च करणागतात्[12] ।
अविशेषान्तरप्राणैर्निशीथे दृश्यते शशी ॥२८॥
अस्तकालविलग्नेन्द्वोरन्तरप्राणजन्मना[13] ।
कालेन लग्नशीतांशू[14] कृत्वा भूयोन्तरासवः ॥२९॥
पूर्वकालेन ते योज्याश्चन्द्रे[15] लग्नाधिकेऽथवा[16] ।
विश्लेषो वाऽन्यथा यावत्तुल्यकालोदयेन्दवः[17] ॥३०॥
इत्थं कर्मक्रमावाप्तकालेनामृततेजसः ।
रश्मिभिः पूरयन्नाशां निशीथे दृश्यते शशी ॥३१॥
अस्ताद्रिमस्तकारूढतिग्मांशुमतभागतः ।
स्वदेशे भोदयप्राणा[18] ग्राह्या यावन्निशाकरम्[19] ॥३२॥
तेष्वहर्मानशुद्धेषु रात्रौ[20] व्युष्टेषु चन्द्रमाः ।
दृश्यते त्वविशिष्टेषु[21] तस्मात्तानविशेषयेत्[22] ॥३३॥

---

[1] पक्षान्तात्परितः A, B; पक्षात्परतः C. [2] हरिमादुपरि A, B. [3] इष्टकालविलग्नोक्तैः C. [4] पूर्वगता A, B; पूर्वाश्रितः C. [5] तदग्रे कोटिशिरःस्पृक् C. [6] अन्वितं A, B. [7] वापरभागात् C. [8] °ऽभिधार्यते A, B. [9] Verse 26 is missing from C. [10] °वैपरादोदयासवः A, B; °वैवराभोभयासवः C. [11] दृश्यकायोस्यतं वरम् A, B; दृश्यकालोच्युतःपरम् C. [12] चरणागतात् C. [13] °विलग्नेन्दो° C. [14] कालोन लग्नशीतांशोः C. [15] योज्याश्चन्द्र C. [16] °केरवौ A, B. [17] °येनवः A, B. [18] देशभेदोदयाप्रणा A, B. स्वे स्वे शोभोदयप्राणा C [19] यावन्निशाकृतः A; यावन्निशाकृताः B. [20] रात्रे C. [21] परिशुद्धेषु A. B. [22] तस्मात्तानपि शेषयेत् C.

तद्घटीभोगसंयुक्तसूर्येन्द्वन्तर्घटीक्रमात्[1] ।
ततोऽहर्मानसंशुद्धिः शेषभोगादिकर्मणा ॥३४॥
अर्केन्दुमध्यनाडीभ्यो[2] दिनमानं विवर्धते ।
तद्विशेषघटीशेषे दिवा चन्द्रोदयः स्मृतः ॥३५॥
तन्नाडिकानुपाताप्तभोगहीनार्कचन्द्रयोः ।
अन्तरालोदयप्राणैः कल्प्यं तत्राविशेषणम् ॥३६॥[3]
चन्द्रादौदयिकात्प्राणा[4] यावानौदयिको[5] रविः ।
ग्राह्यास्ततोऽपि विश्लेषात् कल्प्यते निश्चलकिया ॥३७॥
कृताविशेषनाडीभिर्यावन्नोदेति[6] भास्करः ।
तावदाशामुखादर्शः प्राणैराक्रमते शशी ॥३८॥
आसन्नौ स्वधियाऽभ्यूह्य[7] मध्यलग्ननिशाकरौ ।
कालेन्दुमध्यलग्नानामविशेषं समाचरेत् ॥३९॥
नाड्योऽन्तरालजाः[8] साध्या लङ्काराश्युदयैस्तयोः[9] ।
ऊने[10] विश्लेषनाडीभ्यः[11] शुद्धिः क्षेपोऽधिके स्मृतः ॥४०॥
मध्यलग्नसमश्चन्द्रो जायतेऽनेन कर्मणा ।
तत्क्षिप्त्यपक्रमाक्षैस्तु[12] मध्यच्छाया प्रसाध्यते ॥४१॥[13]
अर्धोदितस्य चन्द्रस्य तथाऽर्धास्तमितस्य च ।
इन्दूदयास्तलग्नाग्रेः शृङ्गस्योन्नतिकल्पना[14] ॥४२॥
कर्मेदं शशिनस्तस्य कुर्यादमृतदीधितेः ।
ग्रहाणामपि सर्वेषामिदं कर्म विधीयते ॥४३॥
अंशैरन्तरितः सूर्यान्नवभिर्दृश्यते भृगुः ।
द्व्यधिकैर्द्व्यधिकैर्दृश्या ज्यौज्ञसौरिधरासुताः[15] ॥४४॥
प्रपन्नवक्रः[16] सद्वर्त्मा सितो दृश्योऽर्धपञ्चमैः[17] ।
चतुर्भिर्वांशुमालित्वादंशैरंशुमतोऽन्तरैः ॥४५॥

---

[1] °संयुक्तः° A, B. [2] अर्केन्दुमध्यनाडिभ्यो A; अर्केन्दुभोगनाडिभ्यो B. [3] The second half of verse 36 is missing from C. [4] चन्द्रादौदयितात्प्राणा B; चन्द्रादौदयिकाः प्राणा C. [5] द्यावानौदयिको A, B. [6] कृतावशेषनाडी° A, B; कृताविशेन्नाडी° C. [7] आसन्नस्वधिया ह्यत्र A, B. [8] नाड्योन्तरालजैः A, B; नाड्योऽन्तरा भुजाः C. [9] लङ्कोरा° C. [10] ऊना C. [11] शुद्धि A, B. [12] तत्क्षित्याप° A, B. [13] Verse 41 is missing from C. [14] शृगस्यो° A, B. [15] ज्योज्ञसौरिधरासुताः A, B; ज्ञार्कसौरिधरासुतान् C. [16] प्रपन्नदृश्यः A, B; प्रसन्नवक्त्रः C. [17] सतोदृश्येऽर्ध° C.

कालभागाः क्रमेणैते दिग्घ्ना[1] विघटिकाः[2] स्मृताः ।
ऐन्द्रयां[3] तद्राशिजा ज्ञेया वारुण्यां सप्तमस्य तु[4] ॥४६॥
ग्रहसूर्यान्तरांशघ्नं[5] त्रिंशता स्वोदयं हरेत् ।
लब्धकालो निरुक्तेन यदा तुल्यस्तदोदयः[6] ॥४७॥
मन्दोच्चकर्णगुणितं[7] शीघ्रकर्णं विभाजयेत् ।
विष्कम्भार्धेन संलब्धो भागहारः प्रकीर्तितः ॥४८॥
ग्रहयोरन्तरं भाज्यं प्रतिलोमानुलोमयोः ।
भुक्तियोगेन शेषाणां भोगविश्लेषसंख्यया[8] ॥४९॥
दिनादिर्लभ्यते[9] कालो योगिनां योगकारकः ।
भुक्तेरनेकरूपत्वात् स्थूलः कालोऽत्र गम्यते[10] ॥५०॥
समलिप्तौ ततो[11] युक्त्या कुर्यात्तन्त्रस्य वेदिता ।
स्वोपदेशाद्गुरोर्नित्यमभ्यासेनापि गम्यते ॥५१॥[12]
पातभागविहीनस्य[13] समलिप्तस्य जीवया[14] ।
हत्वा सदा स्वविक्षेपं[15] भागहारेण भाजयेत् ॥५२॥
जीवभौमार्कपुत्राणामेवं[16] विक्षेपकल्पना ।
शीघ्रोच्चाच्छेषयोश्चापि विक्षेपो दक्षिणोत्तरः[17] ॥५३॥
भिन्नदिक्कौ तु विक्षेपौ युक्तावन्तरमिष्टयोः[18] ।
तुल्यदिक्कौ विशेषेण[19] विद्याद्विवरलिप्तिकाः[20] ॥५४॥
पादाङ्गुलकलाद्धर्द्धा यथा[21] वा लक्ष्यते दिवि ।
तदन्तरं तयोर्वाच्यं योगिनां योगकोविदैः ॥५५॥
द्वात्रिंशत्पञ्चभिर्हृत्वा भूयो भूयस्तदुत्तरैः ।
शुक्रज्यौज्ञार्किभौमानां[22] व्यासलिप्ताक्रमं विदुः ॥५६॥

---

[1] द्विघ्ना A; दि···C. [2] पिघटिकाः B. [3] ऐन्द्रं A, B. [4] सप्तमं स्मृतम् A, B. [5] ग्रहसूर्यान्तरांशघ्नात् A; ग्रहसूर्यान्तरांशघ्ना B. [6] तुल्यस्तयोदयः A. [7] °गुणितः A. [8] भुक्तवि° A, B. [9] दिनादि लभ्यते C. [10] स्थूलस्सम्यग्गते···C. [11] समलिप्तावतो C. [12] सोपदेशदाद्गुरोर्नित्यमभ्यासं वावगभ्यते C. [13] वात° A, B. [14] निश्चयात् A, B. [15] सभास्वविक्षेप A, B; सदास्य विक्षेपं C. [16] जीवभौमार्किपुत्राणामेवं A, B. [17] दक्षिणोत्तरे C. [18] यत्ता° C. [19] तुल्यदिक्कौ तु विश्लिष्टौ C. [20] विद्याद्विपरलिप्तिका C. [21] वदाङ्गुलकलार्धार्धाद्यथा A, B; पादाङ्गुलकलाद्धा···यथा C. [22] शुक्रज्योग्ज्ञार्किभौमानां A, B; शुक्रज्ञार्कार्किभौमानां C.

एतैरेव हतः[1] कर्णश्चन्द्रयोजनजः[2] क्रमात् ।
लम्बनादिषु हारः स्यान्मानयोजनमाश्रितः[3] ॥५७॥
विष्कम्भार्धेन हर्तव्या[4] भागहारहताः स्फुटाः ।
भागहारहृता व्यासा[5] व्यासार्धघ्नाश्च लिप्तिकाः ॥५८॥[6]
शेषः[7] शीतांशुवत्कार्यो दशजीवाविनिश्चयः[8]॥
चन्द्रोदयोपदेशेन[9] शङ्कुः स्यात् स्वचरादिभिः ॥५९॥
स्वहारैर्ग्रहयोगेषु[10] लम्बनावनती विदुः[11] ।
ग्रहोपरागवच्छेषं स्थित्यर्धादिविधिक्रमः ॥६०॥
इति प्रतिदिनाभ्यासविमलीकृतचेतसाम्[12] ।
गुरुप्रसादसम्प्राप्तशास्त्रसद्भावचक्षुषाम्[13] ॥६१॥
नान्यथा जायते वाणी ग्रहचारानुयायिनी[14] ।
रम्यानुरक्तकान्तायाश्चित्तवृत्तिरिवामला ॥६२॥

इति महाभास्करीये षष्ठोऽध्यायः ।

---

[1] एतैरपहृतः A, B; एतैरेव C. [2] °योजनताः A, B; °योजनतां C. [3] योजन is missng from C. [4] भक्तव्या C. [5] लिप्ता C. [6] The second half of verse 58 is missing from A, B. [7] शेष C. [8] विनिश्चयम् C. [9] चन्द्रोदयोपदेशौ तु A, B. [10] स्वभागहारैर्वा वारे C. [11] बन्धनावनतिर्विदुः A, B; लम्बेनावनतीविदुः C. [12] °चेतसः A, B. [13] गुरुःप्र° B. [14] पाणिग्रहचारानुयायिनि A, B.

## सप्तमोऽध्यायः

शतमष्टोत्तरं भानोश्चतुर्भिरयुतैर्हतम्[1]
इन्दोः षट्त्र्यग्निरामेषुभूभृन्नगशिलीमुखाः[2] ॥१॥
सागरर्त्विषुषड्वेदशीतरश्मिसमाः[3] शनेः[4] ।
वेदाश्विद्विचतुष्षट्करामाः सूरेरसृक्तनोः ॥२॥
कृतद्व्यष्टर्तुरन्ध्रद्वियमला[5] भास्करस्य ये ।
बुधभृग्वोस्तु शेषाणां शीघ्रोच्चभगणाः स्मृताः ॥३॥
इन्दूच्चस्य नवैकाश्विवस्वष्टकृतसंज्ञिताः[6] ।
बुधस्य खाश्विखाद्र्यग्निरन्ध्राचलनिशाकराः[7] ॥४॥
भृगोर्वस्वष्टरामाश्विद्विखसप्तसमा[8] गणाः[9] ।
राहोः षड्द्विकनेत्राश्विविष्णुक्रमयमाः[10] स्मृताः ॥५॥
अङ्गपुष्कररामाग्निरन्ध्रेष्विन्दुमिताऽधिकाः ।
द्वादशघ्नं युगं भानोर्भागहारोऽधिकाप्तये ॥६॥[11]
अवमा व्योमवस्वक्षद्व्यष्टखेष्वश्विनो गणाः ।[12]
खाष्टव्योमाभ्रखाभ्राग्निखाष्टयो[13] हार इष्यते ॥७॥
व्योमखेष्वद्रिशीतांशुरन्ध्राद्र्यद्रीषुचन्द्रकाः[14] ।
युगस्य दिवसाः प्रोक्ता विक्षेपांशास्ततः परम् ॥८॥
बुधास्फुजिद्रविजानां[15] द्वावेको वचसां पतेः ।
सार्धोऽशः[16] क्षितिपुत्रस्य पातभागाः क्रमेण च ॥९॥

---

[1] भानोश्चतुर्भिरयुतैर्हृतम् A, B. [2] °भूभृन्नागशिलीमुखाः A; °भूभृन्नगतिलिखामुखाः B; °भृगून्नगशिलीमुखाः C. [3] सागरं चीषु° A, B; सागरर्तुंषु° C. [4] शनैः C. [5] कृत-द्व्यष्टर्तुरन्ध्राद्वियमला C. [6] °संज्ञितः A, B. [7] °द्यग्निरन्ध्राकरनिशाकराः C. [8] खभृ-गोर्वस्वष्टरामाश्वि° A, B; भृगोर्वस्वष्टराशिद्वि° C. [9] गुणाः A, B, C. [10] °नेत्राग्निविष्णु क्रममिताः A, B. [11] द्वादशघ्नयुतं भानोर्भङ्गहाराधिकाप्तयोः A; द्वादशघ्नयुतं भानोर्भंगहारोधिकाप्तयोः B. [12] अवमाख्योऽवमस्वक्षद्व्यष्टखेष्वश्विनो गणाः A; अवमारव्योमस्त्रक्षद्व्यष्टखेष्ठश्विनो गणाः B. [13] खाष्टव्योमाभिखाभ्राग्निखाष्टयो A, B; खाष्टव्योमाभ्रखाभ्रानलाष्टयो C. [14] °चन्द्रखाः A. [15] बुधस्फुजिभ्रविणां च A, B. [16] साधींश: A; साधींशः B.

विंशतिः खरसाश्चापि शतं खाष्टौ खसागराः ।
उदगाशादिविक्षेपान्[1] पातहीनाद् विनिर्दिशेत् ॥१०॥
आशाश्विनः खरन्ध्राणि[2] रसविष्णुक्रमाश्विनः[3] ।
खाष्टेन्दवोऽष्टरुद्राश्च मन्दोच्चांशा[4] यथाक्रमम् ॥११॥
भास्करस्य विजानीयादष्टसप्ततिमंशकान्[5] ।
स्वमन्दोच्चं ग्रहाच्छोध्यं शीघ्राच्छोध्या ग्रहाः[6] सदा ॥१२॥
सप्त चत्वारि रन्ध्राणि पर्वता मनवः क्रमात् ।
एकत्रिंशन्नवशरा नव चाष्टिस्त्रिकेषवः[7] ॥१३॥
मन्दशीघ्रोच्चवृत्तानि विद्याद् विषमयोरपि[8] ।
समयोः पदयोश्चापि[9] कथ्यन्ते मन्दशीघ्रयोः ॥१४॥
शिलीमुखाश्विनोऽग्न्येकवसवोऽष्टादशैव[10] च ।
नवाश्विनो नगशरा[11] वसवस्तिथयः क्रमात् ॥१५॥
एकपञ्चाशतं[12] चैव सूर्याचन्द्रमसोरतः[13] ।
विष्णुक्रमः क्षितिधरा[14] जीवा मख्यादयो मताः ॥१६॥
मख्यादिरहितं कर्म[15] वक्ष्यते[16] तत्समासतः ।
चक्रार्धांशकसमूहाद्विशोध्या[17] ये भुजांशकाः ॥१७॥
तच्छेषगुणिता[18] द्विष्ठाः शोध्याः खाभ्रेषुखाब्धितः[19] ।
चतुर्थांशेन शेषस्य द्विष्ठमन्त्यफलं[20] हतम् ॥१८॥
बाहुकोट्योः[21] फलं कृत्स्नं क्रमोत्क्रमगुणस्य वा ।
लभ्यते चन्द्रतीक्ष्णांश्वोस्ताराणां वापि तत्त्वतः ॥१९॥
इन्दोर्गणाः[22] खखवियद्रसवृन्दनिघ्ना[23]
व्योम्नो भवेयुरिह[24] वृत्तसमानसंख्याः ।

---

[1] °विक्षेपात् C. [2] खनवती A, B. [3] स···विष्णुक्रमाश्विनः C. [4] मन्दोच्चांशे C. [5] °तिरंशकाः A, B. [6] शीघ्राच्छोध्यग्रहाः A, B. [7] चाष्टत्रिकेषवः C. [8] विद्याविषमयोरपि A, B; विशेषसमयोरपि C. [9] पदयोःपश्चात् C. [10] °ऽष्टिदशैव A, B. [11] नवशरा C. [12] एकपञ्चाशकं A, B. [13] सूर्यचन्द्रमसोरतः A. [14] क्षिति···धा C. [15] कर्म missing from C. [16] कथ्यते C. [17] °समूहा विशोध्या B. [18] तच्च······गुणिता C. [19] द्विष्ठाशोध्यखाभ्रेषु खाब्धितः A, B; द्विष्ठाश्शोध्या लाभ्रेष खण्डिताः C. [20] वीषुम° A, B. [21] वाहुकोट्याः C. [22] इन्दोर्गणः A, B; इन्दोर्गुणाः C. [23] खखवियसद्रवृन्द निघ्नो A; खखवीयसवृन्द निघ्नो B. [24] °रथ A, B.

इष्टग्रहस्य भगणैर्गगनस्य वृत्तं
भङ्क्त्वाऽथ तस्य परिधिं लभते समन्तात्[1] ॥२०॥
निबन्धः कर्मणां प्रोक्तो योऽसावौदयिको विधिः ।
अर्धरात्रे त्वयं[2] सर्वो यो विशेषः स कथ्यते ॥२१॥
त्रिशती भूदिने[3] क्षेप्या ह्यवमेभ्यो[4] विशोध्यते ।
ज्ञगुर्वोर्भगणेभ्योऽपि[5] विंशतिश्च ततोऽब्धयः ॥२२॥
अष्टिश्शतगुणा[6] व्यासो योजनानां भुवो रवेः ।
खाष्टाब्ध्यङ्गानि शीतांशोः शून्यवस्वब्धयस्तथा[7] ॥२३॥
वस्विन्द्रियगुणच्छिद्रवस्वङ्गानि[8] विभावसोः ।
अङ्गाङ्गेष्वेकभूतानि चन्द्रकर्णः प्रकीर्तितः ॥२४॥
अष्टिरष्टौ[9] जिना रुद्रा[10] विंशतिर्द्व्यधिकाः[11] क्रमात् ।
दशघ्ना[12] गुरुशुक्रार्किभौमज्ञांशाः[13] स्वमन्दजाः ॥२५॥
मन्दवृत्तानि द्वात्रिंशन्मनवः[14] षष्टिरेव[15] च ।
खाद्रयो वसुदस्राः[16] स्युः शीघ्रवृत्तान्यथ क्रमात् ॥२६॥
द्व्यद्रयः[17] खाङ्गनेत्राणि खाब्धयोऽब्ध्यग्निदस्रकाः[18] ।
द्व्यग्नीन्दवो[19] रवेर्मन्दं[20] शुक्रवद् वृत्तमेव च ॥२७॥
एकत्रिंशत्क्षपाभर्तुरर्धरात्रे विधीयते[21] ।
पातभागाश्च[22] विज्ञेयाः पण्डितैः परिकल्पिताः ॥२८॥
मन्दशीघ्रोच्चयोः[23] क्षेप्यं चक्रार्धं बुधशुक्रयोः ।
राशित्रयं तु शेषाणां पात्यते[24] पातसिद्धये ॥२९॥
शुक्रार्किदेवपूज्यानां भागौ द्वावेव संयुतौ[25] ।
मन्दपाताच्च शीघ्रोच्चात्[26] सार्धांशस्तु कुजज्ञयोः[27] ॥३०॥

---

[1] परिधिर्लभते समन्तात् A, B; परिधिं लभते समानात् C. [2] अर्धरात्रेश्चयं A, B. [3] त्रिशतिर्भूदिने A, B. [4] क्षेप्याऽप्यवमेभ्यो A; क्षेप्याप्यवमे द्यो B. [5] भृगुर्वोर्भ गणेभ्यो C. [6] अद्रिश्शतगुणो A, B. [7] शून्यावस्वब्धयः सदा C. [8] वस्विन्द्रीय° A; वस्वीन्द्रीय° B. [9] अर्वीरष्ट A,B. [10] द्रिघ्ना A,B; रुद्र C. [11] विंशतिद्व्यधिकाः B, C. [12] दशघ्नं C. [13] °भौमज्ञान्धि A, B; भौमज्यांशाः C. [14] मन्दवृत्तान्यथ किंशन्मनव A, B; मन्दवृत्तान्यपित्रिंशन्मनवः C. [15] …ष्टुरेव A, B. [16] वसुरुद्राः C. [17] द्व्यग्नयः A, B, C. [18] खाशुयोऽब्ध्यग्निदस्रकाः A; खाशुयोध्यग्निदस्रकाः B; खाब्धयो ह्यग्नि दस्रकाः C. [19] द्व्यद्रीन्दवो A, B. [20] रवेर्मन्द A, B, C. [21] ऽभिधीयते C. [22] वात° A; तेवाभा° B; पात missing from C. [23] मन्दोच्चयोः C. [24] वात्यते B. [25] कीर्तितौ A, B. [26] मन्दवाताच्च शीघ्रोच्वात् B; मन्दपातोच्च शीघ्रोच्चात् C. [27] भृगुज्ञयोः A, B .

विबुधानां च सर्वेषां शीघ्रपाताः प्रकीर्तिताः[१] ।
शोधयित्वा क्रमात् पातान् विक्षेपांशान्[२] प्रसाधयेत् ॥३१॥
योगविश्लेषनिष्पत्तिरेकानेकस्वदिग्वशात्[३] ।
विक्षेपः स स्फुटो ज्ञेयो ग्रहस्यैकस्य कीर्तितः ॥३२॥
अन्यस्याप्येवमेव स्याच्छेषाः प्रागुक्तकल्पनाः ।
एतत्सर्वं समासेन तन्त्रान्तरमुदाहृतम् ॥३३॥
शीघ्रमन्दोच्चचापार्धसंस्कृतात्स्वीयमन्दतः[४] ।
स्फुटमध्यग्रहाः[५] सर्वे विशेषः[६] परिकीर्तितः ॥३४॥

वेदाश्विरामगुणितान्ययुताहृतानि
चन्द्रस्य[७] शून्यरहितान्यथ मण्डलानि ।
स्वैः स्वैर्हृतानि भगणैः[८] क्रमशो ग्रहाणां
कक्ष्या भवन्ति खलु योजनमानदृष्टया[९] ॥३५॥

इति महाभास्करीये सप्तमोऽध्यायः ।

---

[१] च कीर्तिताः C. [२] क्रमात्पाताद्विक्षेपांशात् A, B; क्रमात्पाताद्विक्षेपाशात् C. [३] °रनेक···स्वदिग्वशात् C. [४] शीघ्रोम° A, B. [५] स्फुटमध्याग्रहाः C. [६] विश्लेषः A, B. [७] ···चन्द्र C. [८] स्वैस्स्वैवतानि भगणौ A; स्वैस्स्वैवतानि भगणैः B. [९] योजनमानदृष्टा A, B, C.

## अष्टमोऽध्यायः

शशिवत्सरताडिते गणेऽह्नां
युगभूवासरभाजिते समादि[1] ।
अधिकाब्दगुणे[2] तथैव विद्या-
दुभयोरन्तरमर्कवर्षपूर्वम् ॥१॥

रविवर्षगणेन नास्ति कृत्यं[3]
परिशेषीकृतराशितोऽथ मासौ ।
धृतिसम्मितवासरान्[4] दिनेभ्यः
परिशोध्यैव ततो[5] भुजादि कार्यम् ॥२॥

रविसंहृतमर्ककाललब्धं
विपरीतं तु धनर्णमिन्द्वहेषु ।
शशिकेन्द्रजमप्यथाशु[6] चैवं
शशिवत्तच्छशिवासरेषु[7] कार्यम् ॥३॥

परिनिष्ठितनाडिका व्यतीताः[8]
शशिनो या दिवसस्य[9] षष्टिनिघ्नाः ।
स्फुटभोगविशेषसूर्यभागै-
र्भजितास्ताः स्फुटनाडिकास्तदाप्ताः ॥४॥

दिनमध्यच्छायार्कादुच्चविशुद्धाद् भुजाफलं[10] यत् स्यात्[11] ।
तत् क्षयधनविपरीतादविशेषविधे[12] रवेर्मध्यम् ॥५॥

ज्यासङ्कलितात्क्रमशः शोधितजीवामखिर्मखेश्शेषम् ।
मख्या हृतमन्त्याप्तं[13] पूर्वयुतं तद्भवति चापः[14] ॥६॥

---

[1] तथा A, B. [2] अधिकाब्धगुणे A, B. [3] कृत्या A, B. [4] धृतिसंमितवासरात् C. [5] तदा A, B. [6] शशिकेन्द्रजमप्यथात्र C. [7] शशिवत्तचिवासरेषु B; ...शशिवासरेषु C. [8] ऽप्यतीता A, B. [9] दिवसविहीनतस्य B. [10] विशुद्धभुजाफले A; विशुद्धभुजाफलं B. [11] कृत्वा C. [12] तत्क्ष्यसनविपरीतादपिशेषविधे A; तत् क्ष्यतनविपरीतादपि शेषविधे B. [13] मध्याहृतमन्त्याप्तं A, B. [14] भवति तच्चापम् A, B.

साधांशकोऽक्षोऽष्टकलाविहीन[1]-
श्छाया दिनार्धे[2] समभूमिभागे ।
पञ्चाङ्गुला[3] द्वादशकस्य शङ्को[4]-
र्वदार्कमस्मिन्दिनमध्ययातम्[5] ॥७॥

अष्टौ लवाः[6] षोडशलिप्तिकोनाः
पलप्रमाणं[7] प्रवदन्ति यस्मिन् ।
छाया दिनार्धेऽर्धचतुर्थसंख्या
तत्राशु वाच्यः[8] सविता नभस्थः[9] ॥८॥

पञ्चाधिका विंशतिरक्षभागाः[10]
त्रिंशच्च यस्मिन् विहिताः पलस्य[11] ।
छाया तयोः शङ्कुसमा दिनार्धे
क्षिप्रं समाचक्ष्व[12] तयोः स्फुटार्कम्[13] ॥९॥

अक्षांशकाः[14] पञ्चदशैव यस्मिन्
छाया रवेः पञ्चमभागयुक्ता ।
सार्धाङ्गुला स्यात् सममण्डलोत्था[15]
वाच्यो[16] विवस्वान् खलु तत्र कीदृक् ॥१०॥

सप्तत्रिंशच्छाया सममण्डलजा[17] पलाङ्गुलास्त्रिंशत्[18] ।
वाच्यो जगत्प्रदीपः सममण्डलसंस्थितः सविता ॥११॥

छाया षोडश दृष्टा प्रागपरसमायता समे देशे ।
सार्धाः सप्त पलांशास्तत्र[19] विवस्वान् कियान् वाच्यः ॥१२॥

नीता रवेर्बलवता मरुता समस्ता
राश्यादयोऽत्र[20] गणिताः सह तत्पराभिः ।
शेषो मया परिगतः खलु तत्पराणां
सैकं[21] शतं कथय भानुमहर्गणं च ॥१३॥

---

[1] साधांशकाक्षाष्ट° A; साधांशकोक्षाष्ट° B. [2] च्छायादिनार्धे A, B. [3] पञ्चाङ्गुल A, B; पञ्चाङ्गुलात् C. [4] शङ्कु C. [5] …स्मिन् दिनमध्ययातः A; आत्वात्स्मिन् दिनमध्ययातः B; …र्कमस्मिन् दिनमध्ययातम् C. [6] अष्टौ लवः A; अष्टो लवः B. [7] वलप्रमाणं A, B; फलप्रमाणं C. [8] तत्रापि वाप्यः C. [9] नभः स्थः A, C. [10] भाग C. [11] फलस्य A, B; लवस्य C. [12] चमाचक्ष्व B; त्वमाचक्ष्व C. [13] स्फुटार्कान् A, B; स्फुटार्कम् C. [14] अक्षांशका C. [15] °ऽक्षा C. [16] वाचो C. [17] समण्डलजा A, B. [18] पलाङ्गुलः° A, B. [19] सप्तफलांशास्तत्र C. [20] समन्ताद्राश्यादयोऽत्र C. [21] सैकां B.

राशिभागसहिताः शशिलिप्ता
बालहस्तपरिमृष्टविनष्टाः ।
पञ्चवर्गविकलाः[1] खलु दृष्टा-
स्ताभिरार्य[2] दिनराशिशशाङ्कौ ॥१४॥

राश्यंशका[3] हृता वात्या भागशेषस्त्रिसप्ततिः[4] ।
वाच्यो[5] भौमः कियांस्तत्र कीदृशो वाऽप्यहर्गणः ॥१५॥

राशित्रयं पञ्चदशांशयुक्तं
लिप्ता निशानाथसुतस्य पञ्च ।
एतत्समीक्ष्याथ गतान्यहानि[6]
यातानि तस्यैव च मण्डलानि ॥१६॥

मघवद्गुरुराशिभागलिप्ताः
शिशुना चपलेन नाशितास्ताः[7] ।
नव तत्र विलिप्तिकास्तु[8] दृष्टा
दिनराशिं गुरुमध्यमं च ताभिः[9] ॥१७॥

मण्डलादि भृगुजस्य सलिप्तं[10]
नष्टमत्र विकला दश दृष्टाः ।
सूर्यजस्य दश सप्तसमेता[11]
ब्रूहि तौ दिनगणावथ[12] शीघ्रम् ॥१८॥

पञ्च सप्त नव भौमशशाङ्कौ
राशिपूर्वगणितौ समवेतौ ।
उच्यतां दिनगणः शशिभौमौ
कीदृशौ च भटतन्त्रविदाशु[13] ॥१९॥

भौमशक्रगुरुमध्यविशेषः[14]
पञ्चराशिगणितः[15] परिपूर्णः ।

---

[1] पञ्चवर्ग विकला B, C. [2] °रार्थ A, B; °रर्ध C. [3] रात्र्यंशका A, B. [4] वात्या भागशेषं त्रिसप्तभिः A; वात्या भागशेष त्रिसप्तभिः B; पात्या भाग शेषस्तु सप्ततिः C. [5] पात्यो C. [6] एतत्समीक्ष्याक्षगतान्यहानि A, B. [7] नाशितास्ताम् A, B. [8] लिप्ति-कास्तु B. [9] गुरुमध्यमाक्षताभिः A, B; गुरुमध्यमात्तथाद्भिः C. [10] सलिप्तौ A, B. [11] शास्तममेता C. [12] यदिगणवथ A; दिगणावथ B; ······दिगणावधि C. [13] भभतन्त्र-विदाशु A, B. [14] °शुक्र° A, B. [15] °गणितं A, B.

उच्यतां दिनगणः कलियातो
देवमन्त्रिरुधिरौ[1] च कियन्तौ ॥२०॥

सूर्याचन्द्रमसौ तुलाधरगतौ दृष्टौ मया तत्त्वतो
भागैर्द्वादशभिर्द्वयेन च युतौ सूर्यस्य वारोदये ।
लिप्ताभिः शशिशून्यसागरयुतौ जीवस्य वारे पुनः
शुक्रस्याथ शनैश्चरस्य दिवसे[2] तुल्यौ कियद्भिर्दिनैः[3] ॥२१॥

विलिप्ताभिरधिकोऽर्को विज्ञेयो भूधरेन्दुभिः ।
शोधयेच्च निशानाथाद्विलिप्ता धृतिसंमिताः[4] ॥२२॥

नाडीभिः कियतीभिरभ्युपगतादह्नां गणादागत-
स्तीक्ष्णांशोर्भगणादिकोऽत्र विलयं नीतोऽधुना[5] वात्यया ।
दृष्टः सप्ततिरेकरूपसहिता शेषः[6] कलानां मया
वक्तव्यो द्युगणो गतश्च सवितुः स्पष्टाश्च या[7] नाडिकाः॥२३॥

अर्काङ्गारकवासरैरपहृतः कश्चिद्दिनानां गणो
लब्धौ तत्र न वेद्मि नैव च[8] तयोः शेषौ मया लक्षितौ ।
यौ तौ मण्डलताडितावथ पुनर्भक्तौ दिनैः स्वैः[9] पृथक्
तत्राप्तं मरुताऽपनीतमधुना[10] चाग्रे तयोस्तिष्ठतः ॥२४॥[11]

अर्कस्याश्विनगाब्धिनागशिखिनः शेषः कुजस्योच्यते
भूताश्व्यङ्गनभोष्टशीतकिरणक्षोणीधरक्ष्माभृतः ।
एताभ्यां पृथगर्कभूमिसुतयोरह्नां गणौ तद्गतं
द्व्यग्रं चापि तयोर्विगणय्य गणका व्यावर्णयध्वं क्रमात् ॥२४*॥

भास्करे[12] मिथुनपर्यवसाने
शर्वरी त्रिगुणसप्तघटी स्यात् ।
अक्षचापगणितं[13] वद तस्मिन्
लम्बकेन सहितं विगणय्य ॥२५॥

---

[1] देवमद्रिरुधिरौ A; देवमन्द्रिरुधिरौ B. [2] दिवसं C. [3] दिनर्द्धिर्दिनैः A; दिनद्धि-र्दिनैः B. [4] धृतिसंमताः A, B. [5] नाडीभिरभ्युपगतादह्नां गणा भागतः । तीक्ष्णांशुर्भग-णादिकेऽत्र निचिते नीतेऽधुना A, B. [6] °सहिताः शेषाः A,B. [7] ये A, B. [8] निवेश-नेव च A; नवे···नेव च B. [9] पुनर्भक्ते स्वदृष्टेः A; पुनर्भक्ते स्वैर्दृढै B. [10] मधुना-पनीतमधुना A, B. [11] The verses 23 and 24 do not occur in C. [12] अक्षप्रश्नास्करे C. [13] अक्षचापगुणता A, B.

भास्करेण परिचिन्त्य कृतोऽयं[1]
मन्दबुद्धिपरिबोधसमर्थः ।
सम्यगार्यभटकर्मनिबन्धः[2]
स्पष्टवाक्यकरणैः समवेतः ॥२६॥

स्पष्टार्थानेककरणैः[3] छेद्यके ग्रहणे[4] रवेः ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥२७॥

इति महाभास्करीयेऽष्टमोऽध्यायः ।

इति महाभास्करीयं समाप्तम्

---

[1] ततो या C. [2] कर्मनिबद्धः A, B. [3] स्पष्टानेककरणे C. [4] छेद्यकेन्द्रगणे A, B.

# महाभास्करीये प्रयुक्तपारिभाषिक-

# शब्दानाम् अनुक्रमणिका

महाभास्करीये प्रयुक्त-

## छन्दसाम् अनुक्रमणिका

# English Translation

OF THE

# MAHĀ-BHĀSKARĪYA

## CHAPTER I

## MEAN LONGITUDE OF A PLANET AND PLANETARY PULVERISER

Homage to God Śiva :

1. I bow to God Śambhu who bears on His forehead a digit of the Moon illumining all directions by its rays, to Him whose feet are adored by the gods and who is the source of all knowledge.

Homage to planets and stars :

2. Glorious are the rays of the Sun which make the lotus blossom forth, (and those) of the Moon whose beauty is like that of the damsel's face, (as also are) the long and clear rays of the stars including Jupiter; so also is the lustre of Mars, Mercury, Saturn, and Venus.

A benedictory stanza in appreciation of the *Āryabhaṭīya* and the pupils of Āryabhaṭa I :

3. May the accurate *Āśmaka-tantra* (*āśmakaṁ sphuṭa-tantraṁ*), which has been acquired by penance, live long in the world for its excellent qualities. May also the pupils of (Ārya)-bhaṭa, who are free from sins and have conquered the enemies of passions, live long.

The *āśmakaṁ sphuṭa-tantraṁ* ("the accurate *Āśmaka-tantra*"), according to the commentators Govinda Svāmī and Parameśvara, is the *Āryabhaṭīya* of Āryabhaṭa I (born 476 A.D.). Govinda Svāmī writes :

> "By this (stanza) the author exhibits the greatness of the *Āryabhaṭīya*, ..."

So also has said Parameśvara :

> "*tapobhiḥ* etc. is a benediction on the *Āryabhaṭa-tantra* and the pupils of Āryabhaṭa."

Exclusive references to Āryabhaṭa I and his work at several places in the present work and the name *Āryabhaṭa-karma-nibandha* ("a compen-

dium of the astronomical processes taught by Āryabhaṭa") given to this work by the author[1] indeed show that *āśmakaṁ sphuṭa-tantraṁ* is none else than the *Āryabhaṭīya.*

The word *āśmaka (aśmaka+aṇ)* literally means "pertaining to Aśmaka", and likewise *āśmakaṁ sphuṭa-tantraṁ* means "an accurate work on astronomy written, studied, or venerated in Aśmaka, or belonging to Aśmaka". This seems to suggest that Āryabhaṭa I, the author of that work, belonged to the Aśmaka country.[2] It is noteworthy in this connection that according to Nīlakaṇṭha (1500 A.D.) he was born in that country.[3]

Reference to the *Āryabhaṭīya* in the above stanza at the beginning of this work is meant, as stated in the *Prayoga-racanā* and by Govinda Svāmī to indicate the school to which the present work belongs.

## MEAN LONGITUDE OF A PLANET

A rule for calculating the *ahargaṇa* :

4-6. Add 3179 to the number of elapsed years of Śaka kings; then multiply (that sum) by 12; and then add the number of months elapsed (since the beginning of Caitra). Put down the result at two places. At one place multiply (that) by the number of intercalary months in a *yuga* and divide by the number of solar months in a *yuga*; and add the resulting intercalary months (omitting the fraction of a month) to the result put at the other place. Multiply tha tsum by 30 and then add the number of lunar days (*tithis*) elapsed (since the beginning of the current month). Set down the result (i.e., the sum obtained) at two places. At one place multiply that by the number of omitted lunar days (in a *yuga*) and divide by the number of lunar days (in a *yuga*), and subtract the resulting omitted lunar days (neglecting the fraction of a day) from the result set down at the other place. The result (thus obtained) is the number of (mean) civil days elapsed since the beginning of Kaliyuga (at mean sunrise at Laṅkā on the given lunar day). These

[1] See vs. 26 of Chapter VIII.

[2] For the Aśmaka country, see Part I, Chapter 2.

[3] See Nīlakaṇṭha's comm. on *Ā*, ii. 1.

days are said to have commenced with Friday and at sunrise (at Laṅkā).[1]

The above rule tells us how to determine the number of mean civil days elapsed at mean sunrise at Laṅkā on the given lunar day (*tithi*) since the beginning of Kaliyuga (when all the planets were in conjunction at the first point of the asterism Aśvinī). According to Āryabhaṭa I and Bhāskara I, the duration of Kaliyuga is 10,80,000 years and it began on Friday, February 18, B.C. 3102, at sunrise at Laṅkā[2] in the beginning of the month Caitra. The Śaka Era, which is usually used in Hindu astronomy for reckoning the years, commenced 3179 years after the beginning of Kaliyuga.

Caitra is the first month of the year. The months in Hindu astronomy are reckoned from one new moon to the next.

The *yuga* is a period of 43,20,000 years. At the beginning and end of a *yuga* the planets together with the Moon's apogee and ascending node are supposed to be in general conjunction. The number of intercalary months in a *yuga* denotes the excess of the number of lunar months in a *yuga* over the number of solar months in a *yuga*. The number of omitted lunar days in a *yuga* is equal to the number of lunar days in a *yuga* minus the number of civil days in a *yuga*. The number of intercalary months, omitted lunar days, etc., in a *yuga* are given in the seventh chapter[3].

In the rule stated above, the given true lunar month is treated as a mean lunar month and the given true lunar day is treated as a mean lunar day. The following is an explanation of the above rule :




Fig. 1

Let K denote the beginning of Kaliyuga; AA′, the current mean lunar month; L, the beginning of the current mean lunar day; and s, the mean sunrise on that day. Also let S denote the beginning of the corresponding mean solar month[4]; and s′, the beginning of the mean solar day

[1] The same rule occurs also in *LBh*, i. 4-8 and *TS*, i. 23-26 (i). For other similar rules, see *SūSi*, i. 47-50; *BrSpSi*, i. 29-30, 34 (i); *ŚiDVṛ*, *I*, i. 15-17; *MSi*, i. 21-22; *SiŚe*, ii. 15-17; *SiŚi*, *I*, i (c), 1-3; *SiSā*, i. 44-47.

[2] Laṅkā is a hypothetical place where the Hindu prime meridian ("the meridian of Ujjain") intersects the equator.

[3] See verses 1-8.

[4] That is to say, if A is the beginning of the *t*th mean lunar month, then S is the beginning of the *t*th mean solar month.

